स्यैवंब्राह्मणोविद्यात्तस्यदेवाअसंन्वसे ॥२१॥
श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेन
क्षत्राणिरूपमश्विनौव्यात्तं ॥ इष्णन्निषाण
मुम्मईषाणसर्वंलोकमईषाण ॥२२॥ इति
रुद्रजाप्ये २॥ ॐआशुःशिशानोवृषभोन
भीमोघनाघनःक्षोभणश्चर्षणीनांसंक्रं
दनोनिमिषएकवीरःशतंसेनाअजयत्सा
कमिंद्र ॥१॥ संक्रंदनेनानिमिषेणजिष्णुना

2

या०
६

युत्कारेणदुश्च्यवनेनधृष्णुनातदिंद्रेणजयत
तत्सहध्वं॥युधोनरइषुहस्तेनवृष्णा॥२॥सइ
षुहस्तैःसनिषंगिभिर्वशीसंस्रष्टासयुधइंद्रो
गणेनः॥संसृष्टजित्सोमपाबाहुस
र्ध्युग्रधन्वाप्रतिहिताभिरस्ता॥३॥बृहस्पते
परिदीयारथेनरक्षोहामित्रांअपबाधमानः
प्रभंजन्सेनाःप्रमृणोयुधाजयंन्नस्माकमेध्य
वितारथानांबलविज्ञायस्थविरःप्रवीरः॥

राम
६

जगत्स्थीयितेनमनीषा ॥८॥ अदद्यदस्त्रे हे त्रहनु
द्गान्भ्रभिसूर्यैः सर्वं तदिंद्र तेवसे ॥९॥ तरणि
र्विश्वदर्शतो ज्योतिः हृद्युपिसूर्यः विश्वमाभा
सिरोचनं ॥१०॥ तत्सूर्यस्य देवत्वं तन्महीत्वं म
ध्याकर्त्तोर्विततं संजभारः ॥ यदेदयुक्त हरि
तः सधस्थादाद्रात्री वासस्तनुते समस्मै ॥११॥
तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते
द्योरुपस्थे ॥ अनंतमन्यद्रुशदस्य पाजः ॥१२॥

ऌस्यमन्यवृतिः संभरं तिवस्त्रमहांऽअस्यसूर्ये

ध
१०

वडादित्यमहांऽअसि॥ महस्तेसतोमहिमापन

स्यतेद्धादेवमहांऽअसि॥३९॥ वट्सूर्यश्रवसाम

हांऽअसिसत्रादेवमहांऽअसि॥ मन्हादेवानाम

सूर्यःपुरोहितोविभुज्योतिरदाभ्यं॥४०॥ श्रा

यंतइवसूर्यंविश्वेदिंद्रस्यभक्षत॥ वसूनि

जातेजनमानओजसाप्रतिभागंनदीधिमः॥४१

अद्यादेवाउदितासूर्यस्यनिरंहसःपिपृता

राम
१०

निरवद्यात् ॥ तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥१८॥ आकृष्णेन रजसा वर्त्तमानो निवेशयंनमृतं मर्त्यं च ॥ हिरंण्ययेन सविता रथेना देवो याति भुवनानि पश्यंन् ॥१९॥ इति रुद्र जा० ॥४॥ नमस्ते रुद्र मन्यव उतो त इषवे नमः बाहुभ्यामुत ते नमः ॥१॥ याते रुद्र शिवा तनूरघोरापापकाशिनी ॥ तया नस्तन्वा शंतमया गिरिशंताभिचाकशीहि ॥२॥ यामिषुं गिरि

शंतहस्तेबिभर्ष्यस्तवे शिवांगिरत्रतांकुरुमा
हंसी ॥ पुरुषंजगत् ॥३॥ शिवेनवचसात्वागि
रिसाछावदामसि ॥ यथानःसर्वमिज्जगदय
क्ष्मंसुमनाअसत् ॥४॥ अध्यवोचदधिव
क्ताप्रथमोदैव्योभिषक् ॥ अहींश्चसर्वांजंभयं
त्सर्वाश्चयातुधान्योधराचीपरासुव ॥५॥ अ
सौयस्ताम्रोअरुणउतबभ्रुःसुमंगलः ॥ ये
चेनंरुद्राअभितोदिक्षुश्रिताःसहस्रशोवै

वैषांहेडईमहे॥६॥ ऽअसौयोवसर्प्पतिनीलग्
ग्रीवोविलोहित॥ उतैनंगोपाऽअदृश्रन्नदृश्र
न्नुदहार्यः सदृष्टोमृडयातिन॥७॥ नमोस्तु
नीलग्रीवायसहस्राक्षायमीढुषे॥ ऽअथोयेऽअ
स्यसत्वानोहंतेभ्योकरंनमः॥८॥ प्रमुंचध
न्वनस्त्वमुभयोरार्त्न्योर्ज्यां॥ याश्चतेहस्तइषवः
परातभगवोवप॥९॥ विज्यंधनुःकपर्द्दिनोवि
शल्योबाणवांऽउत॥ ऽअनेशन्नस्ययाइषवऽआ

ध० १२

भुरस्यनिषंगधिः ॥१०॥ यातेहेतिर्मीढुष्टमहस्ते
वभूवतेधनुः ॥ तयास्मान्विश्वतस्त्वमयक्ष्मया
परिभुजः ॥११॥ परितेधन्वनोहेतिरस्मान्वृण
क्तुविश्वतः ॥ अथोयइषुधिस्तवारेअस्मिन्निधे
हितम् ॥१२॥ अवतत्यधनुष्ट्वंसहस्राक्षश
तेषुधेनिशीर्यशल्यानांमुखाशिवोनःसुमना
भव ॥१३॥ नमस्तआयुधायानाततायधृष्ण
वे ॥ उभाभ्यामुततेनमोबाहुभ्यांतवधन्वने

राम १२

सृकायेभ्योजिघांसद्भ्योमुष्णतांपतयेनमोन

मो॥असिमद्भ्योनक्तंचरद्भ्योविकृंतानांपतयेन

मोनमः॥२१॥नमउष्णीषिणेगिरिचरायकुलुंचा

नांपतयेनमोनमः॥इषुमद्भ्योधंन्वायिभ्यश्चवो

नमोनमो॥ऽआतंन्वानेभ्यःप्रतिदधानेभ्यश्चवो

नमोनमो॥ऽआयछद्भ्योस्यद्भ्यश्चवोनमोनमो

२२॥नमोविसृजद्भ्योविध्यद्भ्यश्चवोनमोनमो

स्वपद्भ्योजाग्रद्भ्यश्चवोनमोनमः॥शयानेभ्य

ष
२५

राम
१५

मंत्रिणेवाणिजायकक्षाणांपतयेनमोनमः ॥ उ
च्चैर्घोषायाः क्रंदयतेपत्तीनांपतयेनमोनमः ॥ १६
कृत्स्नायतयाधावतेसत्वनांपतयेनमोनमः ॥
सहमानायनिव्याधिऽव्याव्याधिनीनांपतयेनमो
नमो ॥ निषंगिणेककुभास्तेनानांपतयेनमोन
मो ॥ निंचेरवेपरिचरायारण्यानांपतयेनमोनमो
२० ॥ वंचतेपरिवंचतेस्तायूनांपतयेनमोनमो ॥
निषंगिणइषुधिमतेतस्कराणांपतयेनमोन ॥